( द्वा ) अ॒थै॒तद्वै । ( द्वा॒ऽअ॒ ) आ॒यु॒रे॒तज्ज्यो॒तिः प्र॒वि॒श॒ति य॒ऽए॒त॒म॒नु वा ब्रू॒ते भ॒क्ष॒य॒ति वा त॒स्य व्र॒त॒च॒र्य्या या सृ॒ष्टौ ॥ ३१ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १४–२–३ ॥ ( ३–२ ) ॥

इति द्वितीयप्रपाठकः समाप्तः ॥ १४–२ ॥

कंडिकासंख्या ॥ १२२ ॥

इति तृतीयोऽध्यायः समाप्तश्च ॥१४–३॥ कण्डिकासंख्या ॥ ६७ ॥

इति प्रथमं प्रवर्ग्यकाण्डं समाप्तम् ॥ १४–१ ॥

---

जीवंति । पिन्वते ह वा अस्मै सोमः । य एवमेतद्वेद । न ह वा अस्याप्रवर्ग्येण केनचन यज्ञेनेष्टं भवति । य एवमेतद्वेद ॥ ३० ॥

अथ एतद्वै आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते भक्षयति वा । तस्य व्रतचर्या-या सृष्टौ ॥ ३१ ॥

इति सोमादिकर्मशेषाभिधायकं प्रवर्ग्यकाण्डं समाप्तम् ॥

---

यागसाधनत्वात् । यद्वा आहुतिद्वारा सर्वस्य जगतः तत्परिणामत्वात् तस्य सर्वात्मकत्वम् । अत एव प्रवर्ग्योऽपि 'सर्वम्' तस्मादुभयोः सर्वत्वसाम्यात् तादात्म्येन स्तुतिः । अपि च—यद्यदा 'सः' सोमः 'अभिषुतः' अभिषवसंस्कारेण द्रवीकृतः भवति तदा असौ 'प्रवृक्तः' भवति । यदा तूलीतः अभिषवानंतरं चमसेषु गृहीतो भवति तदा असौ प्रवर्ग्यः 'रुचितः' भवति । यदा तु अग्नौ स सोमः 'हुतः' भवति तदा अयं 'पिन्वितः' सिक्तो भवति । एतदुक्तं भवति । सोमस्याभिषवोन्नयनहोमाः प्रवृंजनरोचनपिन्वनात्मकाः । अत एव एतानि प्रवृंजनादीनि तदात्मकानि । अन्यत् पूर्ववद्योज्यम् । अथैतद्वेदनफलमाह—पिन्वते ह वा० तद्वेदेति । एवमुक्तप्रकारेण 'यः' खलु 'एतत्' प्रवर्ग्यस्य सोमात्मकत्वं 'वेद' जानाति । 'अस्मै' जानते सः 'सोमः' 'पिन्वते' फलप्रदो भवति । इत्थं प्रवर्ग्यस्याग्निहोत्राद्यात्मकत्वमुक्त्वा तद्वेदितुः फलमुक्तम् । अथ तेषामग्निहोत्रादीनामपि यत्प्रवर्ग्यात्मकत्वमुक्तम् । तद्वेदनफलमाह—न ह वा अस्या०तद्वेदेति । 'यः' एवमुक्तप्रकारेण अग्निहोत्रादिकर्मसु अधिश्रयणादौ प्रवृंजनादिसंपादनेन यत्प्रवर्ग्यात्मकत्वमुक्तम् । तद्वेद जानीयात् । 'अस्य' वेदितुः 'केनचन' केनापि अग्निहोत्रादिना 'यज्ञेन' 'अप्रवर्ग्येण' प्रवर्ग्यरहितेन खलु 'न इष्टं' भवति । सर्वेष्वपि यज्ञेषु उक्तप्रकारेण प्रवर्ग्यस्य संपादनात् सप्रवर्ग्येणैव सर्वेण यज्ञजातेन इष्टवान् भवतीत्यर्थः ॥ ३० ॥

एतद्ब्राह्मणाध्ययनतदर्थानुष्ठानयोः कर्तुः प्रागुक्तां व्रतचर्यां पूर्ववदतिदिशति—अथैतद्वा आ० सृष्टाविति । अथेत्यारंभे । यतः प्रागुक्तं प्रवर्ग्याख्यं तथैतच्च ब्राह्मणे स्तूयते । एतदुभयं आयुर्जीवनं तद्वेदभूतमित्यर्थः । अतस्तस्य व्रताचरणेन रक्षा कार्या इति भावः । कुतोऽस्य रक्षणापेक्षेति तत्राह—एतज्ज्योतिरिति । 'यः' खलु पुमान् 'एतं' प्रवर्ग्यं 'अनुब्रूते' कर्मकाले अधीते वा । तत्रत्यं हुतशिष्टं हविर्भक्षयति वा । स एतज्ज्योतिः द्युलोके

दृश्यमानं सौरं तेजः प्रविशति। प्रवर्ग्यस्य सूर्यात्मना अवस्थानस्य प्रागुक्तत्वात्। अतस्तस्य पुंसः व्रतचर्या कार्या। सा कीदृशीति चेदुच्यते 'या व्रतचर्या सृष्टौ' प्रवर्ग्यसृष्टिप्रतिपादके पूर्वाध्यायस्य प्रथमब्राह्मणे "नातपति प्रच्छादयेत" इत्यादिना प्रतिपादिता। सैवात्रादि द्रष्टव्या ॥ ३१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
चतुर्दशकाण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे तृतीयेऽध्याये
द्वितीयं ब्राह्मणम् ॥ १४ । ( १ ) ३ । २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्त्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशकाण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ( १४ ( १ )–३ ) ॥

इति माध्यन्दिनीयशतपथब्राह्मणे उत्तराख्ये भागे प्रथमं कर्मशेषं प्रवर्ग्यकाण्डं समाप्तिमगात्

